## बुधपञ्चविंशतिनामस्तोत्रम्

अस्य श्रीवुधपञ्चविंशतिनामस्तोत्रस्य प्रजापतिर्ऋषिः, त्रिष्टुप् छन्दः, बुधो देवता, बुधप्रीत्यर्थं जपे विनियोगः ॥

बुधो बुद्धिमतां श्रेष्ठो बुद्धिदाता धनप्रदः ।
प्रियङ्गुकलिकाश्यामः कञ्जनेत्रो मनोहरः ॥१॥
ग्रहोपमो रौहिणेयो नक्षत्रेशो दयाकरः ।
विरुद्धकार्यहन्ता च सौम्यो बुद्धिविवर्धनः ॥२॥
चन्द्रात्मजो विष्णुरूपी ज्ञानी ज्ञो ज्ञानिनायकः ।
ग्रहपीडाहरो दारपुत्रधान्यपशुप्रदः ॥३॥
लोकप्रियः सौम्यमूर्तिर्गुणदो गुणिवत्सलः ।
पञ्चविंशतिनामानि बुधस्यैतानि यः पठेत् ॥४॥
स्मृत्वा बुधं सदा तस्य पीडा सर्वा विनश्यति ।
तद्दिने वा पठेद्यस्तु लभते स मनोगतम् ॥५॥

इति श्रीपद्मपुराणे बुधपञ्चविंशतिनामस्तोत्रं संपूर्णम् ॥

•

## बुधकवचम्

अस्य श्रीवुधकवचस्तोत्रमंत्रस्य कश्यप ऋषिः, अनुष्टुप् छंदः, बुधो देवता, बुधप्रीत्यर्थं जपे विनियोगः ॥

बुधस्तु पुस्तकधरः कुंकुमस्य समद्युतिः ।
पीतांबरधरः पातु पीतमाल्यानुलेपनः ॥१॥
कटिं च पातु मे सौम्यः शिरोदेशं बुधस्तथा ।
नेत्रे ज्ञानमयः पातु श्रोत्रे पातु निशाप्रियः ॥२॥
घ्राणं गंधप्रियः पातु जिह्वां विद्याप्रदो मम ।
कंठं पातु विधोः पुत्रो भुजौ पुस्तकभूषणः ॥३॥
वक्षः पातु वरांगश्च हृदयं रोहिणीसुतः ।
नाभिं पातु सुराराध्यो मध्यं पातु खगेश्वरः ॥४॥
जानुनी रौहिणेयश्च पातु जंघेऽखिलप्रदः ।
पादौ मे बोधनः पातु पातु सौम्योऽखिलं वपुः ॥५॥
एतद्धि कवचं दिव्यं सर्वपापप्रणाशनम् ।
सर्वरोगप्रशमनं सर्वदुःखनिवारणम् ॥६॥
आयुरारोग्यशुभदं पुत्रपौत्रप्रवर्धनम् ।
यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥७॥

इति श्रीब्रह्मवैवर्तपुराणे बुधकवचं संपूर्णम् ॥

## बृहस्पतिस्तोत्रम्

अस्य श्रीबृहस्पतिस्तोत्रस्य गृत्समद ऋषिः, अनुष्टुप् छन्दः, बृहस्पतिर्देवता, बृहस्पतिप्रीत्यर्थं जपे विनियोगः ।।

गुरुर्बृहस्पतिर्जीवः सुराचार्यो विदांवरः ।
वागीशो धिषणो दीर्घश्मश्रुः पीताम्बरो युवा ।।१।।
सुधादृष्टिर्ग्रहाधीशो ग्रहपीडापहारकः ।
दयाकरः सौम्यमूर्तिः सुरार्च्यः कुड्मलद्युतिः ।।२।।
लोकपूज्यो लोकगुरुर्नीतिज्ञो नीतिकारकः ।
तारापतिश्चाङ्गिरसो वेदवैद्यपितामहः ।।३।।
भक्त्या बृहस्पतिं स्मृत्वा नामान्येतानि यः पठेत् ।
अरोगी बलवान् श्रीमान् पुत्रवान् स भवेन्नरः ।।४।।
जीवेद्वर्षशतं मर्त्यो पापं नश्यति नश्यति ।
यः पूजयेद्गुरुदिने पीतगन्धाक्षताम्बरैः ।।५।।
पुष्पदीपोपहारैश्च पूजयित्वा बृहस्पतिम् ।
ब्राह्मणान्भोजयित्वा च पीडाशान्तिर्भवेद्गुरोः ।।६।।

इति श्रीस्कन्दपुराणे बृहस्पतिस्तोत्रं संपूर्णम् ।।

•

## बृहस्पतिकवचम्

अस्य श्रीबृहस्पतिकवचस्तोत्रमंत्रस्य ईश्वर ऋषिः, अनुष्टुप् छंदः, गुरुर्देवता, गं बीजं, श्रीशक्तिः, क्लीं कीलकं, गुरुप्रीत्यर्थं जपे विनियोगः ।।

अभीष्टफलदं देवं सर्वज्ञं सुरपूजितम् ।
अक्षमालाधरं शांतं प्रणमामि बृहस्पतिम् ।।१।।
बृहस्पतिः शिरः पातु ललाटं पातु मे गुरुः ।
कर्णौ सुरगुरुः पातु नेत्रे मेऽभीष्टदायकः ।।२।।
जिह्वां पातु सुराचार्यो नासां मे वेदपारगः ।
मुखं मे पातु सर्वज्ञो कंठं मे देवतागुरुः ।।३।।
भुजावांगिरसः पातु करौ पातु शुभप्रदः ।
स्तनौ मे पातु वागीशः कुक्षिं मे शुभलक्षणः ।।४।।
नाभिं देवगुरुः पातु मध्यं पातु सुखप्रदः ।
कटिं पातु जगद्वंद्य ऊरू मे पातु वाक्पतिः ।।५।।

जानुजंघे सुराचार्यो पादौ विश्वात्मकस्तथा ।
अन्यानि यानि चांगानि रक्षेन्मे सर्वतो गुरुः ॥६॥
इत्येतत्कवचं दिव्यं त्रिसंध्यं यः पठेन्नरः ।
सर्वान्कामानवाप्नोति सर्वत्र विजयी भवेत् ॥७॥

इति श्रीब्रह्मयामलोक्तं बृहस्पतिकवचं संपूर्णम् ॥

## शुक्रस्तवराजः

अस्य श्रीशुक्रस्तवराजस्य प्रजापतिर्ऋषिः, अनुष्टुप् छन्दः, शुक्रो देवता, शुक्रप्रीत्यर्थं जपे विनियोगः ॥

नमस्ते भार्गवश्रेष्ठ दैत्यदानवपूजित ।
वृष्टिरोधप्रकर्त्रे च वृष्टिकर्त्रे नमो नमः ॥१॥
देवयानिपितस्तुभ्यं वेदवेदांगपारग ।
परेण तपसा शुद्धः शंकरो लाकसुंदरः ॥२॥
प्राप्तो विद्यां जीवनाख्यां तस्मै शुक्रात्मने नमः ।
नमस्तस्मै भगवते भृगुपुत्राय वेधसे ॥३॥
तारामंडलमध्यस्थ स्वभासाभासितांबर ।
यस्योदये जगत्सर्वं मंगलार्हं भवेदिह ॥४॥
अस्तं याते ह्यरिष्टं स्यात्तस्मै मंगलरूपिणे ।
त्रिपुरावासिनो दैत्यान् शिवबाणप्रपीडितान्॥५॥
विद्ययाऽजीवयच्छुक्रो नमस्ते भृगुनंदन ।
ययातिगुरवे तुभ्यं नमस्ते कविनंदन ॥६॥
बलिराज्यप्रदो जीवस्तस्मै जीवात्मने नमः ।
भार्गवाय नमस्तुभ्यं पूर्वगीर्वाणवंदित ॥७॥
जीवपुत्राय यो विद्यां प्रादात्तस्मै नमो नमः ।
नमः शुक्राय काव्याय भृगुपुत्राय धीमहि ॥८॥
नमऽ कारणरूपाय नमस्ते कारणात्मने ।
स्तवराजमिमं पुण्यं भार्गवस्य महात्मनः ॥९॥
यः पठेच्छृणुयाद्वापि लभते वांछितं फलम् ।
पुत्रकामो लभेत्पुत्रान् श्रीकामो लभते श्रियम् ॥१०॥
राज्यकामो लभेद्राज्यं स्त्रीकामः स्त्रियमुत्तमाम् ।
भृगुवारे प्रयत्नेन पठितव्यं समाहितैः ॥११॥

अन्यवारे तु होरायां पूजयेद्भृगुनन्दनम् ।
रोगार्तो मुच्यते रोगाद्भयार्तो मुच्यते भयात् ॥१२॥
यद्यत्प्रार्थयते जन्तुस्तत्तत्प्राप्नोति सर्वदा ।
प्रातःकाले प्रकर्तव्या भृगुपूजा प्रयत्नतः ।
सर्वपापविनिर्मुक्तः प्राप्नुयाच्छिवसन्निधिम् ॥१३॥

इति श्रीब्रह्मयामले शुक्रस्तवराजः संपूर्णः ॥

●

## शुक्रकवचम्

भृणालकुन्देन्दुपयोजसुप्रभं पीतांबरं प्रसृतमक्षमालिनम् ॥
समस्तशास्त्रार्थविधिं महांतं ध्यायेत्कविं वांछितमर्थसिद्धये ॥१॥
शिरो मे भार्गवः पातु भालं पातु ग्रहाधिपः ।
नेत्रे दैत्यगुरुः पातु श्रोत्रे मे चन्दनद्युतिः ॥२॥
पातु मे नासिकां काव्यो वदनं दैत्यवन्दितः ।
वचनं चोशनाः पातु कंठं श्रीकंठभक्तिमान् ॥३॥
भुजौ तेजोनिधिः पातु कुक्षिं पातु मनोव्रजः ।
नाभिं भृगुसुतः पातु मध्यं पातु महीप्रियः ॥४॥
कटिं मे पातु विश्वात्मा ऊरू मे सुरपूजितः ।
जानुं जाड्यहरः पातु जंघे ज्ञानवतां वरः ॥५॥
गुल्फौ गुणनिधिः पातु पातु पादौ वरांबरः ।
सर्वाण्यंगानि मे पातु स्वर्णमालापरिष्कृतः ॥६॥
य इदं कवचं दिव्यं पठति श्रद्धयान्वितः ।
न तस्य जायते पीडा भार्गवस्य प्रसादतः ॥७॥

इति श्रीब्रह्मांडपुराणे शुक्रकवचं संपूर्णम् ॥

●

## शनैश्चरस्तवराजः

नारद उवाच

ध्यात्वा गणपतिं राजा धर्मराजो युधिष्ठिरः ।
धीरः शनैश्चरस्येमं चकार स्तवमुत्तमम् ॥ १ ॥
शिरो मे भास्करिः पातु भालं छायासुतोऽवतु ।
कोटराक्षो दृशौ पातु शिखिकण्ठनिभः श्रुती ॥ २ ॥

घ्राणं मे भीषणः पातु मुखं बलिमुखोऽवतु।
स्कन्धौ संवर्तकः पातु भुजौ मे भयदोऽवतु ॥ ३ ॥

सौरिर्मे हृदयं पातु नाभिं शनैश्चरोऽवतु।
ग्रहराजः कटिं पातु सर्वतो रविनन्दनः ॥ ४ ॥

पादौ मन्दगतिः पातु कृष्णः पात्वखिलं वपुः।
रक्षामेतां पठेन्नित्यं सौरेर्नामबलैर्युताम् ॥ ५ ॥

सुखी पुत्री चिरायुश्च स भवेन्नात्र संशयः।
सौरिः शनैश्चरः कृष्णो नीलोत्पलनिभः शनिः ॥ ६ ॥

शुष्कोदरो विशालाक्षो दुर्निरीक्ष्यो विभीषणः।
शिखिकण्ठनिभो नीलश्छायाहृदयनन्दनः ॥ ७ ॥

कालदृष्टिः कोटराक्षः स्थूलरोमावलीमुखः।
दीर्घो निर्मांसगात्रस्तु शुष्को घोरो भयानकः ॥ ८ ॥

नीलांशुः क्रोधनो रौद्रो दीर्घश्मश्रुर्जटाधरः।
मन्दो मन्दगतिः खंजो तृप्तः संवर्तको यमः ॥ ९ ॥

ग्रहराजः कराली च सूर्यपुत्रो रविः शशी।
कुजो बुधो गुरुः काव्यो भानुजः सिंहिकासुतः ॥१०॥

केतुर्देवपतिर्बाहुः कृतान्तो नैऋर्तस्तथा।
शशी मरुत् कुबेरश्च ईशानः सुर आत्मभूः ॥११॥

विष्णुर्हरो गणपतिः कुमारः काम ईश्वरः।
कर्ता हर्ता पालयिता राज्येशो राज्यदायकः ॥१२॥

छायासुतः श्यामलाङ्गो धनहर्ता धनप्रदः।
क्रूरकर्मविधाता च सर्वकर्मावरोधकः ॥१३॥

तुष्टो रुष्टः कामरूपः कामदो रविनन्दनः।
ग्रहपीडाहरः शान्तो नक्षत्रेशो ग्रहेश्वरः ॥१४॥

स्थिरासनः स्थिरगतिर्महाकायो महाबलः।
महाप्रभो महाकालः कालात्मा कालकालकः ॥१५॥

आदित्यभयदाता च मृत्युरादित्यनन्दनः।
शतभिरुक्षदयिता त्रयोदशीतिथिप्रियः ॥१६॥

तिथ्यात्मकस्थितिगणो नक्षत्रगणनायकः।
योगराशिर्मुहूर्तात्मा कर्ता दिनपतिः प्रभुः ॥१७॥

शमीपुष्पप्रियः श्यामस्त्रैलोक्याभयदायकः ।
नीलवासाः क्रियासिन्धुर्नीलाञ्जनचयच्छविः ॥१८॥
सर्वरोगहरो देवः सिद्धो देवगणस्तुतः ।
अष्टोत्तरशतं नाम्नां सौरेश्छायासुतस्य यः ॥१९॥
पठेन्नित्यं तस्य पीडा समस्ता नश्यति ध्रुवम् ।
कृत्वा पूजां पठेन्मर्त्यो भक्तिमान् यः स्तवं सदा ॥२०॥
विशेषतः शनिदिने पीडा तस्य विनश्यति ।
जन्मलग्ने स्थितिर्वापि गोचरे क्रूरराशिगे ॥२१॥
दशासु च गते सौरौ तदा स्तवमिमं पठेत् ।
पूजयेद्यः शनिं भक्त्या शमीपुष्पाक्षताम्बरैः ॥२२॥
विधाय लोहप्रतिमां नरो दुःखाद्विमुच्यते ।
बाधा याऽन्यग्रहाणां च यः पठेत्तस्य नश्यति ॥२३॥
भीतो भयाद्विमुच्येत बद्धो मुच्येत बन्धनात् ।
रोगी रोगाद्विमुच्येत नरः स्तवमिमं पठेत् ।
पुत्रवान् धनवान् श्रीमान् जायते नात्र संशयः ॥२४॥

नारद उवाच

स्तवं निशम्य पार्थस्य प्रत्यक्षोऽभूत् शनैश्चरः ।
दत्त्वा राज्ञे वरः कामं शनिश्चान्तर्दधे तदा ॥२५॥

इति श्रीभविष्यपुराणे शनैश्चरस्तवराजः संपूर्णः ॥

•

## शनिवज्रपञ्जरकवचम्

नीलांबरो नीलवपुः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् ।
चतुर्भुजः सूर्यसुतः प्रसन्नः सदा मम स्याद्वरदः प्रशान्तः ॥ १ ॥

ब्रह्मा उवाच

शृणुध्वमृषयः सर्वे शनिपीडाहरं महत् ।
कवचं शनिराजस्य सौरेरिदमनुत्तमम् ॥ २ ॥
कवचं देवतावासं वज्रपंजरसंज्ञकम् ।
शनैश्चरप्रीतिकरं सर्वसौभाग्यदायकम् ॥ ३ ॥
ॐ श्रीशनैश्चरः पातु भालं मे सूर्यनंदनः ।
नेत्रे छायात्मजः पातु पातु कर्णौ यमानुजः ॥ ४ ॥

नासां वैवस्वतः पातु मुखं मे भास्करः सदा ।
स्निग्धकंठश्च मे कंठं भुजौ पातु महाभुजः ॥ ५ ॥
स्कंधौ पातु शनिश्चैव करौ पातु शुभप्रदः ।
वक्षः पातु यमभ्राता कुक्षिं पात्वसितस्तथा ॥ ६ ॥
नाभिं ग्रहपतिः पातु मंदः पातु कटिं तथा ।
ऊरू ममांतकः पातु यमो जानुयुगं तथा ॥ ७ ॥
पादौ मंदगतिः पातु सर्वांगं पातु पिप्पलः ।
अङ्गोपाङ्गानि सर्वाणि रक्षेन् मे सूर्यनंदनः ॥ ८ ॥
इत्येतत्कवचं दिव्यं पठेत्सूर्यसुतस्य यः ।
न तस्य जायते पीडा प्रीतो भवति सूर्यजः ॥ ९ ॥
व्ययजन्मद्वितीयस्थो मृत्युस्थानगतोऽपि वा ।
कलत्रस्थो गतो वापि सुप्रीतस्तु सदा शनिः ॥१०॥
अष्टमस्थे सूर्यसुते व्यये जन्मद्वितीयगे ।
कवचं पठते नित्यं न पीडा जायते क्वचित् ॥११॥
इत्येतत्कवचं दिव्यं सौरेर्यन्निर्मितं पुरा ।
द्वादशाष्टमजन्मस्थदोषान्नाशयते सदा ।
जन्मलग्नस्थितान् दोषान् सर्वान्नाशयते प्रभुः ॥१२॥

इति श्रीब्रह्मांडपुराणे ब्रह्मनारदसंवादे शनिवज्रपंजरकवचं संपूर्णम् ॥

•

## राहुस्तोत्रम्

राहुर्दानवमन्त्री च सिंहिकाचित्तनन्दनः ।
अर्धकायः सदाक्रोधी चन्द्रादित्यविमर्दनः ॥१॥
रौद्रो रुद्रप्रियो दैत्यः स्वर्भानुर्भानुभीतिदः ।
ग्रहराजः सुधापायी राकातिथ्यभिलाषुकः ॥२॥
कालदृष्टिः कालरूपः श्रीकण्ठहृदयाश्रयः ।
विधुंतुदः सैंहिकेयो घोररूपो महाबलः ॥३॥
ग्रहपीडाकरो दंष्ट्री रक्तनेत्रो महोदरः ।
पञ्चविंशतिनामानि स्मृत्वा राहुं सदा नरः ॥४॥
यः पठेन्महती पीडा तस्य नश्यति केवलम् ।
आरोग्यं पुत्रमतुलां श्रियं धान्यं पशूंस्तथा ॥५॥
ददाति राहुस्तस्मै यः पठते स्तोत्रमुत्तमम् ।
सततं पठते यस्तु जीवेद्वर्षशतं नरः ॥६॥

इति श्रीस्कंदपुराणे राहुस्तोत्रं संपूर्णम् ॥

## राहुकवचम्

प्रणमामि सदा राहुं शूर्पाकारं किरीटिनम् ।
सैंहिकेयं करालास्यं लोकानामभयप्रदम् ॥१॥
नीलांबरः शिरः पातु ललाटं लोकवंदितः ।
चक्षुषी पातु मे राहुः श्रोत्रे त्वर्धशरीरवान् ॥२॥
नासिकां मे धूम्रवर्णः शूलपाणिर्मुखं मम ।
जिह्वां मे सिंहिकासूनुः कण्ठं मे कठिनांघ्रिकः ॥३॥
भुजंगेशो भुजौ पातु नीलमाल्याम्बरः करौ ।
पातु वक्षःस्थलं मंत्री पातु कुक्षिं विधुंतुदः ॥४॥
कटिं मे विकटः पातु ऊरू मे सुरपूजितः ।
स्वर्भानुर्जानुनी पातु जंघे मे पातु जाड्यहा ॥५॥
गुल्फौ ग्रहपतिः पातु पादौ मे भीषणाकृतिः ।
सर्वाण्यंगानि मे पातु नीलचन्दनभूषणः ॥६॥
राहोरिदं कवचमृद्धिदवस्तुदं यो
भक्त्या पठत्यनुदिनं नियतः शुचिः सन् ।
प्राप्नोति कीर्तिमतुलां श्रियमृद्धिमायु-
रारोग्यमात्मविजयं च हि तत्प्रसादात् ॥७॥

इति श्रीमहाभारते धृतराष्ट्रसंजयसंवादे द्रोणपर्वणि राहुकवचं संपूर्णम् ॥

•

## केतुपञ्चविंशतिनामस्तोत्रम्

केतुः कालः कलयिता धूम्रकेतुर्विवर्णकः ।
लोककेतुर्महाकेतुः सर्वकेतुर्भयप्रदः ॥१॥
रौद्रो रुद्रप्रियो रुद्रः क्रूरकर्मा सुगन्धधृक् ।
पलाशधूमसंकाश श्चित्रयज्ञोपवीतधृकू ॥२॥
तारागणविमर्दी च जैमिनेयो ग्रहाधिपः ।
पञ्चविंशतिनामानि केतोर्यः सततं पठेत् ॥३॥
तस्य नश्यति बाधा च सर्वकेतुप्रसादतः ।
धनधान्यपशूनां च भवेद्वृद्धिर्न संशयः ॥४॥

इति श्रीस्कन्दपुराणे केतोः पञ्चविंशतिमामस्तोत्रं संपूर्णम् ॥

•

## केतुकवचम्

केतुं करालवदनं चित्रवर्णं किरीटिनम् ।
प्रणमामि सदा केतुं ध्वजाकारं ग्रहेश्वरम् ॥१॥
चित्रवर्णः शिरः पातु भालं धूम्रसमद्युतिः ।
पातु नेत्रे पिंगलाक्षः श्रुती मे रक्तलोचनः ॥२॥
घ्राणं पातु सुवर्णाभश्चिबुकं सिंहिकासुतः ।
पातु कंठं च मे केतुः स्कंधौ पातु ग्रहाधिपः ॥३॥
हस्तौ पातु सुरश्रेष्ठः कुक्षिं पातु महाग्रहः ।
सिंहासनः कटिं पातु मध्यं पातु महासुरः ॥४॥
ऊरू पातु महाशीर्षो जानुनी मेऽतिकोपनः ।
पातु पादौ च मे क्रूरः सर्वांगं नरपिंगलः ॥५॥
य इदं कवचं दिव्यं सर्वरोगविनाशनम् ।
सर्वशत्रुविनाशं च धारणाद्विजयी भवेत् ॥६॥
इति श्रीब्रह्माण्डपुराणे केतुकवचं संपूर्णम् ॥

•

## नवग्रहस्तोत्रम्

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ।
तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥१॥
दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम् ।
नमामि शशिनं सोमं शम्भोर्मुकुटभूषणम् ॥२॥
धरणीगर्भसंभूतं विद्युत्कान्तिसमप्रभम् ।
कुमारं शक्तिहस्तं तं मङ्गलं प्रणमाम्यहम् ॥३॥
प्रियंगुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥४॥
देवानां च ऋषीणां च गुरुं काञ्चनसन्निभम् ।
बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥५॥
हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥६॥
नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम् ।
छायामार्तण्डसंभूतं तं नमामि शनैश्चरम् ॥७॥
अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ।
सिंहिकागर्भसंभूतं तं राहुं प्रणम्यहम् ॥८॥

पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् ।
रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ॥९॥
इति व्यासमुखोद्गीतं यः पठेत् सुसमाहितः ।
दिवा वा यदि वा रात्रौ विघ्नशांतिर्भविष्यति ॥१०॥
नरनारीनृपाणां च भवेद्दुःस्वप्ननाशनम् ।
ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ॥११॥
ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः ।
ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ॥१२॥

इति व्यासविरचितं नवग्रहस्तोत्रं संपूर्णम् ॥

•

## नवग्रहपीडाहरस्तोत्रम्

ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसंभूतां पीडां हरतु मे रविः ॥१॥
रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ।
विषमस्थानसंभूतां पीडां हरतु मे विधुः ॥२॥
भूमिपुत्रो महातेजा जगतां भयकृत् सदा ।
वृष्टिकृद्वृष्टिहर्ता च पीडां हरतु मे कुजः ॥३॥
उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ।
सूर्यप्रियकरो विद्वान् पीडां हरतु मे बुधः ॥४॥
देवमन्त्री विशालाक्षः सदा लोकहिते रतः ।
अनेकशिष्यसंपूर्णः पीडां हरतु मे गुरुः ॥५॥
दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः ।
प्रभुस्ताराग्रहाणां च पीडां हरतु मे भृगुः ॥६॥
सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ।
मन्दचारः प्रसन्नात्मा पीडां हरतु मे शनिः ॥७॥
महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ।
अतनुश्चोर्ध्वकेशश्च पीडां हरतु मे शिखी ॥८॥
अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः ।
उत्पातरूपो जगतां पीडां हरतु मे तमः ॥९॥

इति ब्रह्माण्डपुराणोक्तं नवग्रहपीडाहरस्तोत्रं संपूर्णम् ॥

•

# * प्रकीर्णस्तोत्राणि *

## कालभैरवाष्टकम्

देवराजसेव्यमानपावनांघ्रिपंकजं व्यालयज्ञसूत्रमिंदुशेखरं कृपाकरम् ।
नारदादियोगिवृंदवंदितं दिगंबरं काशिकापुराधिनाथकालभैरवं भजे ॥१॥
भानुकोटिभास्वरं भवाब्धितारकं परं नीलकंठमीप्सितार्थदायकं त्रिलोचनम् ।
कालकालमंबुजाक्षमक्षशूलमक्षरं काशिका० ॥२॥
शूलटंकपाशदंडपाणिमादिकारणं श्यामकायमादिदेवमक्षरं निरामयम् ।
भीमविक्रमं प्रभुं विचित्रतांडवप्रियं काशिका० ॥३॥
भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं भक्तवत्सलं स्थितं समस्तलोकविग्रहम् ।
विनिक्वणन्मनोज्ञहेमकिंकिणीलसत्कटिं काशिका० ॥४॥
धर्मसेतुपालकं स्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम् ।
स्वर्णवर्णशेषपाशशोभितांगमंडलं काशिका० ॥५॥
रत्नपादुकाप्रभाभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरंजनम् ।
मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिका० ॥६॥
अट्टहासभिन्नपद्मजांडकोशसंततिं दृष्टिपातनष्टपापजालमुग्रशासनम् ।
अष्टसिद्धिदायकं कपालमालिकंधरं काशिका० ॥७॥
भूतसंघनायकं विशालकीर्तिदायकं काशिवासलोकपुण्यपापशोधकं विभुम् ।
नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिका० ॥८॥
कालभैरवाष्टकं पठन्ति ये मनोहरं ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम् ।
शोकमोहदैन्यलोभकोपतापनाशनं प्रयांति कालभैरवांघ्रिसंनिधिं नरा ध्रुवम् ॥९॥

इति श्रीमच्छंकराचार्यविरचितं कालभैरवाष्टकं संपूर्णम् ॥

•

## श्रीकार्तिकेयस्तोत्रम्

योगीश्वरो महासेनः कार्तिकेयोऽग्निनन्दनः ।
स्कन्दः कुमारः सेनानीः स्वामी शंकरसम्भवः ॥१॥
गाङ्गेयस्ताम्रचूडश्च ब्रह्मचारी शिखिध्वजः ।
तारकारिरुमापुत्रः क्रौञ्चारिश्च षडाननः ॥२॥
शब्दब्रह्मसमुद्रश्च सिद्धः सारस्वतो गुहः ।
सनत्कुमारो भगवान् भोगमोक्षफलप्रदः ॥३॥

शरजन्मा गणाधीशः पूर्वजो मुक्तिमार्गकृत् ।
सर्वागमप्रणेता च वाञ्छितार्थप्रदर्शकः ॥४॥

अष्टाविंशतिनामानि मदीयानीति यः पठेत् ।
प्रत्यूषे श्रद्धया युक्तो मूको वाचस्पतिर्भवेत् ॥५॥

महामन्त्रमयानीति मम नामानुकीर्तनम् ।
महाप्रज्ञामवाप्नोति नात्र कार्या विचारणा ॥६॥

इति श्रीरुद्रयामले प्रज्ञाविवर्धनाख्यं श्रीमत्कार्तिकेयस्तोत्रं सम्पूर्णम् ॥

•

## नवनागस्तोत्रम्

अनंतं वासुकिं शेषं पद्मनाभं च कंबलम् ।
शंखपालं धृतराष्ट्रं च तक्षकं कालियं तथा ॥१॥

एतानि नव नामानि नागानां च महात्मनाम् ।
सायंकाले पठेन्नित्यं प्रातःकाले विशेषतः ।
विषाद् भयं तस्य नास्ति सर्वत्र विजयी भवेत् ॥२॥

इति नवनागस्तोत्रं संपूर्णम् ॥

•

## तुलसीस्तोत्रम्

जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रियवल्लभे ।
यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्तकारिणः ॥१॥
नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे ।
नमो मोक्षप्रदे देवि नमः संपत्प्रदायिके ॥२॥
तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा ।
कीर्तिताऽपि स्मृता वाऽपि पवित्रयति मानवम् ॥३॥
नमामि शिरसा देवीं तुलसीं विलसत्तनुम् ।
यां दृष्ट्वा पापिनो मर्त्या मुच्यन्ते सर्वकिल्बिषात् ॥४॥
तुलस्या रक्षितं सर्वं जगदेतच्चराचरम् ।
या विनिर्हन्ति पापानि दृष्टा वा पापिभिर्नरैः ॥५॥
नमस्तुलस्यतितरां यस्यै बद्ध्वाऽञ्जलिं कलौ ।
कलयंति सुखं सर्वं स्त्रियो वैश्यास्तथापरे ॥६॥

तुलस्या नापरं किंचिद्दैवतं जगतीतले ।
यया पवित्रितो लोको विष्णुसंगेन वैष्णवः ॥७॥

तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ ।
आरोपयति सर्वाणि श्रेयांसि वरमस्तके ॥८॥

तुलस्यां सकला देवा वसंति सततं यतः ।
अतस्तामर्चयेल्लोके सर्वान् देवान् समर्चयन् ॥९॥

नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे ।
पाहि मां सर्वपापेभ्यः सर्वसंपत्प्रदायिके ॥१०॥

इति स्तोत्रं पुरा गीतं पुण्डरीकेण धीमता ।
विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः ॥११॥

तुलसी श्रीमहालक्ष्मीर्विद्याऽविद्या यशस्विनी ।
धर्म्या धर्मानना देवी देवदेवमनःप्रिया ॥१२॥

लक्ष्मीप्रियसखी देवी द्यौर्भूमिरचला चला ।
षोडशैतानि नामानि तुलस्याः कीर्तयन्नरः ॥१३॥

लभते सुतरां भक्तिमन्ते विष्णुपदं लभेत् ।
तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीर्हरिप्रिया ॥१४॥

तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे ।
नमस्ते नारदनुते नारायणमनःप्रिये ॥१५॥

इति श्रीपुण्डरीककृतं तुलसीस्तोत्रं संपूर्णम् ॥

•

## तुलसीकवचम्

अस्य श्रीतुलसीकवचस्तोत्रमंत्रस्य श्रीमहादेव ऋषिः अनुष्टुप् छन्दः श्रीतुलसी देवता मनईप्सितकामनासिद्ध्यर्थे जपे विनियोगः ॥

तुलसी श्रीमहादेवि नमः पंकजधारिणि ।
शिरो मे तुलसी पातु भालं पातु यशस्विनी ॥१॥

दृशौ मे पद्मनयना श्रीसखी श्रवणे मम ।
घ्राणं पातु सुगन्धा मे मुखं च सुमुखी मम ॥२॥

जिह्वां मे पातु शुभदा कण्ठं विद्यामयी मम ।
स्कन्धौ कह्लारिणी पातु हृदयं विष्णुवल्लभा ॥३॥

पुण्यदा मे पातु मध्यं नाभिं सौभाग्यदायिनी ।
कटिं कुण्डलिनी पातु ऊरू नारदवंदिता ॥४॥
जननी जानुनी पातु जंघे सकलवंदिता ।
नारायणप्रिया पादौ सर्वाङ्गं सर्वरक्षिणी ॥५॥

संकटे विषमे दुर्गे भये वादे महाहवे ।
नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा ॥६॥
इतीदं परमं गुह्यं तुलस्याः कवचामृतम् ।
मर्त्यानाममृतार्थाय भीतानामभयाय च ॥७॥
मोक्षाय च मुमुक्षूणां ध्यायिनां ध्यानयोगकृत् ।
वशाय वश्यकामानां विद्यायै वेदवादिनाम् ॥८॥

द्रविणाय दरिद्राणां पापिनां पापशान्तये ॥९॥
अन्नाय क्षुधितानां च स्वर्गाय स्वर्गमिच्छताम् ।
पशव्यं पशुकामानां पुत्रदं पुत्रकांक्षिणाम् ॥१०॥

राज्याय भ्रष्टराज्यानामशान्तानां च शान्तये ।
भक्त्यर्थं विष्णुभक्तानां विष्णौ सर्वान्तरात्मनि ॥११॥
जाप्यं त्रिवर्गसिद्ध्यर्थं गृहस्थेन विशेषतः ।
उद्यन्तं चण्डकिरणमुपस्थाय कृताञ्जलिः ॥१२॥

तुलसीकानने तिष्ठन्नासीनो वा जपेदिदम् ।
सर्वान् कामानवाप्नोति तथैव मम सन्निधिम् ॥१३॥
मम प्रियकरं नित्यं हरिभक्तिविवर्धनम् ।
या स्यान्मृतप्रजा नारी तस्या अङ्गं प्रमार्जयेत् ॥१४॥

सा पुत्रं लभते दीर्घजीविनं चाप्यरोगिणम् ।
वंध्याया मार्जयेदङ्गं कुशैर्मन्त्रेण साधकः ॥१५॥
साऽपि संवत्सरादेव गर्भं धत्ते मनोहरम् ।
अश्वत्थे राजवश्यार्थी जपेदग्नेः सुरूपभाक् ॥१६॥

पलाशमूले विद्यार्थी तेजोऽर्थ्यभिमुखो रवेः ।
कन्यार्थी चंडिकागेहे शत्रुहत्यै गृहे मम ॥१७॥
श्रीकामो विष्णुगेहे च उद्याने स्त्री वशा भवेत् ।
किमत्र बहुनोक्तेन शृणु सैन्येश तत्त्वतः ॥१८॥

यं यं काममभिध्यायेत्तं तं प्राप्नोत्यसंशयम् ।
मम गेहगतस्त्वं तु तारकस्य वधेच्छया ॥१९॥

जपन् स्तोत्रं च कवचं तुलसीगतमानसः ।
मण्डलात्तारकं हन्ता भविष्यसि न संशयः ॥२०॥

इति श्रीब्रह्माडपुराणे तुलसीमाहात्म्ये तुलसीकवचं संपूर्णम् ॥

•

## अश्वत्थस्तोत्रम्

श्री नारद उवाच

अनायासेन लोकोऽयं सर्वान् कामानवाप्नुयात् ।
सर्वदेवात्मकं चैकं तन्मे ब्रूहि पितामह ॥ १ ॥

ब्रह्मोवाच

शृणु देवमुनेऽश्वत्थं शुद्धं सर्वात्मकं तरुम् ।
यत्प्रदक्षिणतो लोकः सर्वान् कामान्समश्नुते ॥ २ ॥
अश्वत्थाद्दक्षिणे रुद्रः पश्चिमे विष्णुरास्थितः ।
ब्रह्मा चोत्तरदेशस्थः सर्वे त्विन्द्रादिदेवताः ॥ ३ ॥
स्कंधोपस्कंधपत्रेषु गोविप्रमुनयस्तथा ।
मूलं वेदाः त्रयो यज्ञाः संस्थिता मुनिपुंगव ॥ ४ ॥
पूर्वादिदिक्षु संयाता नदीनदसरोऽब्धयः ।
तस्मात्सर्वप्रयत्नेन ह्यश्वत्थं संश्रयेद् बुधः ॥ ५ ॥
त्वं क्षीरफलकश्चैव शीतलश्च वनस्पते ।
त्वामाराध्य नरो विंद्यादैहिकामुष्मिकं फलम् ॥ ६ ॥
चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे ।
बोधितत्त्वाय देवाय ह्यश्वत्थाय नमो नमः ॥ ७ ॥
अश्वत्थ यस्मात्त्वयि वृक्षराजे नारायणस्तिष्ठति सर्वकाले ।
अतः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि ॥ ८ ॥
क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते ।
सत्येन तेन वृक्षेन्द्र मामपि श्रीर्निषेवताम् ॥ ९ ॥
एकादशात्मरुद्रोऽसि वसुनाथशिरोमणिः ।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥१०॥

अग्निगर्भः शमीगर्भो देवगर्भः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो यज्ञगर्भो नमोऽस्तु ते ॥११॥

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥१२॥

सततं वरुणो रक्षेत्त्वामाराद् वृष्टिराश्रयेत् ।
परितस्त्वां निषेवंतां तृणानि सुखमस्तु ते ॥१३॥

अक्षिस्पंदं भुजस्पंदं दुःस्वप्नं दुर्विचिंतनम् ।
शत्रूणां च समुत्थानं ह्यश्वत्थ शमय प्रभो ॥१४॥

अश्वत्थाय वरेण्याय सर्वैश्वर्यप्रदायिने ।
नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥१५॥

मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अन्ततः शिवरूपाय वृक्षराजाय ते नमः ॥१६॥

यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते ।
यदाश्रयाच्चिरंजीवी तमश्वत्थं नमाम्यहम् ॥१७॥

अश्वत्थ सुमहाभाग सुभग प्रियदर्शन ।
इष्टकामांश्च मे देहि शत्रुभ्यस्तु पराभवम् ॥१८॥

आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसंपदम् ।
देहि देव महावृक्ष त्वामहं शरणं गतः ॥१९॥

ऋग्यजुःसाममंत्रात्मा सर्वरूपः परात्परः ।
अश्वत्थो वेदमूलोऽसावृषिभिः प्रोच्यते सदा ॥२०॥

ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीडितः ।
आवर्त्य लक्षसंख्यं तत्स्तोत्रमेतत्सुखी भवेत् ॥२१॥

ब्रह्मचारी हविष्याशी त्वधःशायी जितेन्द्रियः ।
पापोपहतचित्तोऽपि व्रतमेतत्समाचरेत् ॥२२॥

एकहस्तं द्विहस्तं वा कुर्याद् गोमयलेपनम् ।
अर्चेत् पुरुषसूक्तेन प्रणवेन विशेषतः ॥२३॥

मौनी प्रदक्षिणं कुर्यात्प्रागुक्तफलभाग्भवेत् ।
विष्णोर्नामसहस्रेण ह्यच्युतस्यापि कीर्तनात् ॥२४॥

पदे पदान्तरं गत्वा करचेष्टाविवर्जितः ।
वाचा स्तोत्रं मनो ध्याने चतुरङ्गं प्रदक्षिणम् ॥२५॥

अश्वत्थः स्थापितो येन तत्कुलं स्थापितं ततः ।
धनायुषां समृद्धिस्तु नरकात्तारयेत्पितॄन् ॥२६॥

अश्वत्थमूलमाश्रित्य शाकान्नोदकदानतः ।
एकस्मिन् भोजिते विप्रे कोटिब्राह्मणभोजनम् ॥२७॥

अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात् ।
अक्षयं फलमाप्नोति ब्रह्मणो वचनं यथा ॥२८॥

एवमाश्वासितोऽश्वत्थः सदाऽऽश्वासाय कल्पते ।
यज्ञार्थं छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात् ॥२९॥

छिन्नो येन वृथाऽश्वत्थश्छेदिताः पितृदेवताः ।
अश्वत्थः पूजितो यत्र पूजिताः सर्वदेवताः ॥३०॥

इति ब्रह्मनारदसंवादे अश्वत्थस्तोत्रं सम्पूर्णम् ।

# ❀ गुरुस्तोत्राणि ❀

## गुर्वष्टकम्

शरीरं सुरूपं तथा वा कलत्रं यशश्चारु चित्रं धनं मेरुतुल्यम् ।
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥१॥

कलत्रं धनं पुत्रपौत्रादि सर्वं गृहं बान्धवाः सर्वमेतद्धि जातम् ।
गुरोरंघ्रिपद्मेः मनश्चैन्न लग्नं ततः किं० ॥२॥

षडङ्गादिवेदो मुखे शास्त्रविद्या कवित्वादि गद्यं सुपद्यं करोति ।
गुरोरंघ्रिपद्मे० ॥३॥

विदेशेषु मान्यः स्वदेशेषु धन्यः सदाचारवृत्तेषु मत्तो न चान्यः ।
गुरोरंघ्रिपद्मे० ॥४॥

क्षमामण्डले भूपभूपालवृन्दैः सदा सेवितं यस्य पादारविन्दम् ।
गुरोरंघ्रिपद्मे० ॥५॥

यशो मे गतं दिक्षु दानप्रतापाज्जगद्वस्तु सर्वं करे यत्प्रसादात् ।
गुरोरंघ्रिपद्मे० ॥६॥

न भोगे न योगे न वा वाजिराजौ न कान्तामुखे नैव वित्तेषु चित्तम् ।
गुरोरंघ्रिपद्मे० ॥७॥

अरण्ये न वा स्वस्य गेहे न कार्ये न देहे मनो वर्तते मे त्वनर्घ्ये ।
गुरोरंघ्रिपद्मे० ॥८॥

गुरोरष्टकं यः पठेत् पुण्यदेही यतिर्भूपतिर्ब्रह्मचारी च गेही ।
लभेद्वांछितार्थं पदं ब्रह्मसंज्ञं गुरोरुक्तवाक्ये मनो यस्य लग्नम् ॥९॥

इति श्रीशंकरभगवत्पादकृतौ गुर्वष्टकं सम्पूर्णम् ॥

●

## श्रीवेदव्यासाष्टकम्

कलिमलास्तविवेकदिवाकरं समवलोक्य तमोवलितं जनम् ।
करुणया भुवि दर्शितविग्रहं मुनिवरं तमहं सततं भजे ॥१॥
भरतवंशसमुद्धरणेच्छया स्वजननीवचसा परिनोदितः ।
अजनयत्तनयत्रितयं प्रभुर्मुनिवरं तमहं सततं भजे ॥२॥
मतिबलादि निरीक्ष्य कलौ नृणां लघुतरं कृपया निगमांबुधेः ।
समकरोदिह भागमनेकधा मुनिवरं तमहं सततं भजे ॥३॥
सकलधर्मनिरूपणसागरं विविधचित्रकथासमलंकृतम् ।
व्यरचयच्च पुराणकदंबकं मुनिवरं तमहं सततं भजे ॥४॥
श्रुतिविरोधसमन्वयदर्पणं निखिलवादिमतांध्यविदारणम् ।
ग्रथितवानपि सूत्रसमूहकं मुनिवरं तमहं सततं भजे ॥५॥
यदनुभाववशेन दिवं गतः समधिगम्य महास्त्रसमुच्चयम् ।
कुरुचमूमजयद्विजयो द्रुतं मुनिवरं तमहं सततं भजे ॥६॥
समरवृत्तविबोधसमीहया कुरुवरेण मुदा कृतयाचनः ।
सपदि सूतमदादमलेक्षणं मुनिवरं तमहं सततं भजे ॥७॥
वननिवासपरौ कुरुदंपती सुतशुचा तपसा च विकर्षितौ ।
मृततनूजगणं समदर्शयन्मुनिवरं तमहं सततं भजे ॥८॥

व्यासाष्टकमिदं पुण्यं ब्रह्मानन्देन कीर्तितम् ।
यः पठेन्मनुजो नित्यं स भवेच्छास्त्रपारगः ॥९॥

इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं श्रीवेदव्यासाष्टकं सम्पूर्णम् ॥

●

## श्रीशंकरदेशिकाष्टकम्

विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे ।
हृदये कलये विमलं चरणं भव शंकरदेशिक मे शरणम् ॥१॥

करुणावरुणालय पालय मां भवसागरदुःखविदूनहृदम् ।
रचिताखिलदर्शनतत्त्वमिदं भव शंकरदेशिक मे शरणम् ॥२॥

भवता जनता सुखिता भविता निजबोधविचारणचारुमते ।
कलयेश्वरजीवविवेकविदं भव शंकरदेशिक मे शरणम् ॥३॥

भव एव भवानिति मे नितरां समजायत चेतसि कौतुकिता ।
मम वारय मोहमहाजलधिं भव शंकरदेशिक मे शरणम् ॥४॥

सुकृतेऽधिकृते बहुधा भवतो भविता पददर्शनलालसता ।
अतिदीनमिमं परिपालय मां भव शंकरदेशिक मे शरणम् ।।५।।

जगतीमवितुं कलिताकृतयो विचरन्ति महामहसश्छलतः ।
अहिमांशुरिवात्र विभासि पुरो भव शंकरदेशिक मे शरणम् ।।६।।

गुरुपुंगव पुंगवकेतन ते समतामयतां न हि कोऽपि सुधीः ।
शरणागतवत्सल तत्त्वनिधे भव शंकरदेशिक मे शरणम् ।।७।।

विदिता न मया विशदैककला न च किंचन काञ्चनमस्ति गुरो ।
द्रुतमेव विधेहि कृपां सहजां भव शंकरदेशिक मे शरणम् ।।८।।

इति श्रीमत्तोटकाचार्यविरचितं श्रीशंकरदेशिकाष्टकं संपूर्णम् ।।

●

## आचार्य-प्रशस्ति

### ( विविध ग्रन्थों से सङ्कलित )

नमाम्यभोगिपरिवारसम्पदं निरस्तभूतिमनुमार्धविग्रहम् ।
अनुग्रमुन्मृदितकाललाञ्छनं विनायकमपूर्वशङ्करम् ।।१।।

आशैलादुदयात्तथास्तगिरितो भास्वद्यशोरश्मिभिः
व्याप्तं विश्वमनन्धकारमभवद्यस्य स्म शिष्यैरिदम् ।
आराज्ज्ञानगभस्तिभिः प्रतिहतश्चन्द्रायते भास्करः
तस्मै शङ्करभानवे तनुमनोवाग्भिर्नमः स्यात्सदा ।।२।।

येषां धीसूर्यदीप्त्या प्रतिहतिमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतोर्जननमरणसन्तानदोलाधिरूढेः ।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैर्भूषिताः शिष्यसङ्घाः
सद्यो मुक्ताः स्थितास्तान् यतिवरमहितान् यावदायुर्नमामि ।।३।।

उद्धृत्य वेदपयसः कमलामिवाब्धेः
आलिङ्गिताखिलजगत्प्रभवैकमूर्तिम् ।
विद्यामशेषजगतां सुखदामदाद्यः
तं शंकरं विमलभाष्यकृतं नमामि ।।४।।

यद्भाष्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थना-
सार्थव्यग्रधियः समग्रमरुतः स्वर्गेऽपि निर्वेदिनः ।
यस्मिन् मुक्तिपथः पथीनमुनिभिः संप्रार्थितः सम्बभौ
तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिदां बिभ्रते ।।५।।

वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽऽसीद् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥६॥

भगवत्पादपादाब्जपांसवः परन्तु सन्ततम् ।
अपारासारसंसारसागरोत्तारसेतवः ॥७॥

वेदान्ताम्भोगभीरा नयमकरकुला ब्रह्मविद्याब्जषण्डा
पाषण्डोत्तुङ्गवृक्षप्रमथननिपुणा मानवीचीतरङ्गा ।
यस्यास्योत्था सरस्वत्यखिलभवभयध्वंसिनी शङ्करस्य
गङ्गा शम्भोः कपर्दादिव निखिलगुरोर्नौमि तत्पादपद्मम् ॥८॥

मीमांसया कपटतो भुजगाम्बयेव स्वाधीनतामुपनिषद्विनतेव नीता ।
येनोद्धृताऽमृतफलेन गरुत्मतेव तस्मै नमो भगवतेऽद्भुतशङ्कराय ॥९॥

स्तुवन्मोहतमस्तोमभानुभावमुपेयुषः ।
स्तुमस्तान् भगवत्पादान् भवरोगभिषग्वरान् ॥१०॥

महामोहपङ्के विरिञ्चाचरान्तं प्रजाहस्तिनं मग्नमालोक्य भाष्यैः ।
जलैः क्षालयित्वाऽऽत्मविद्यादिवं यो नयत्येकलं शङ्करं तं नमामि ॥११॥

सूत्रप्रग्रहवेदवाजिनि महन्मीमांसकस्यन्दने
तिष्ठन् भाष्यपिनाकमुज्ज्वलगुणं कृत्वात्मधीसायकम् ।
आकृष्य प्रदहन्नशेषविपदां मूलं पुराणां त्रयं
भूयान्नोऽभिनवः पुरारिरशुभस्योच्छित्तये शङ्करः ॥१२॥

हरलीलावताराय शङ्कराय वरौजसे ।
कैवल्यकलनाकल्पतरवे गुरवे नमः ॥१३॥

वेदान्तार्थं गभीरं ह्यतिसुगमतया बोधयामीति विष्णुः
व्यासात्माऽसूत्रयत्तद् दुरधिगममभूद् वादिदुर्बुद्धिभेदात् ।
भिन्दन् दुर्बुद्धिभेदं य इह करुणयाऽभाषयद् भाष्यमेतत्
तं वन्दे सर्ववन्द्यं त्रिजगति भगवत् पादसंज्ञं महेशम् ॥१४॥

यद्भाष्योक्तेर्लवपरिजुषश्छात्रवर्गा महान्तो
निर्भिन्दन्ति प्रबलमतयो वादिशैलं समस्तम् ।
यैर्वेदाब्धेरमृतमिव सद्भाष्यमात्मप्रकाशं
तत्पादाब्जं स्फुरतु हृदये ह्युद्धृतं सर्वदा मे ॥१५॥

संसारसर्पपरिदष्टविनष्टजन्तु-
सञ्जीवनाय परया कृपयोपपन्नः ।
ब्रह्मावबोधपरमौषधमुद्वहन् यः
तं शङ्करं परतरं भिषजां भजामि ॥१६॥

श्रीसम्बन्धमुदीक्ष्य वाचकपदेऽग्रान् शार्ङ्गिणं वैष्णवाः
चन्द्रोत्तंसपदास्पदत्वकलनाच्छम्भुं च शैवा विदुः ।
आनन्दाद्वयशोभमानपरमप्रेमास्पदं योगिनः
तान् पादाम्बुजरेणुधूततमसो वन्दे सदा श्रीगुरून् ॥१७॥
वेदान्तव्रातनीरं शतपथकथितन्यायरत्नप्रपूरं
पारावारं सुतारं निगममुखषडङ्गात्मसद्ग्राहघोरम् ।
कारं कारं सुगाहं श्रुतमतमथितैर्ब्रह्मविद्यामृतं यः
प्रादादादाय तस्मादशरणशरणं शङ्करं तं नमामः ॥१८॥
ये वेदान्तसुधोदधिं सुमनसां निःश्रेयसाय स्वयं
निर्मथ्योदहरद् निरूपणगुणावृत्तेन चेतोमथा ।
अद्वैतामृतमासुरानुशयिनामास्वादनीयेतरत्
तानास्माकगुरोरुपैमि भगवत्पादादिमान् देशिकान् ॥१९॥
श्रीमच्छङ्करसद्गुरोर्भगवतोऽगाधामसाधारणीं
वाणीं नः प्रतनीयसीं मुहुरिमां गाढुं समुत्कण्ठते ।
तन्मूर्तिः प्रभुरेव भक्तजनतावात्सल्यवैपुल्यभू-
रस्मै साधु ददातु शस्तदयया हस्तावलम्बं हरः ॥२०॥
वेदान्तार्थतदाभासनीरक्षीरविवेकिनम् ।
नमामि भगवत्पादं परहंसधुरन्धरम् ॥२१॥
अलब्ध्वातिशयं यस्माद्व्यावृत्तास्तमवादयः ।
गरीयसे नमस्तस्मा अविद्याग्रन्थिभेदिने ॥२२॥
अद्वैतार्णवपूर्णचन्द्रमभिदा पद्माटवीभास्करं
विद्वत्कोटिसमर्चितांघ्रियुगलं प्रद्वेषिकक्षानलम् ।
हृद्याभेद्यसमस्तवेदजनितप्रोद्यद्विवेकाङ्कुरं
स्विद्यद्वागमृतं परात्परगुरुं श्रीशङ्करं तं भजे ॥२३॥

•

## श्रीशङ्कराचार्याष्टोत्तरशतनामस्तोत्रम्

श्रीशङ्कराचार्यवर्यो ब्रह्मानन्दप्रदायकः ।
अज्ञानतिमिरादित्यः सुज्ञानाम्बुधिचन्द्रमाः ॥१॥
वर्णाश्रमप्रतिष्ठाता श्रीमान् मुक्तिप्रदायकः ।
शिष्योपदेशनिरतो भक्ताभीष्टप्रदायकः ॥२॥
सूक्ष्मतत्त्वरहस्यज्ञः कार्याकार्यप्रबोधकः ।
ज्ञानमुद्राञ्चितकरः शिष्यहृत्तापहारकः ॥३॥

परिव्राजाश्रमोद्धर्ता सर्वतन्त्रस्वतन्त्रधीः ।
अद्वैतस्थापनाचार्यः साक्षाच्छङ्कररूपभृत् ॥४॥
षण्मतस्थापनाचार्यस्त्रयीमार्गप्रकाशकः ।
वेदवेदान्ततत्त्वज्ञो दुर्वादिमतखण्डनः ॥५॥
वैराग्यनिरतः शान्तः संसारार्णवतारकः ।
प्रसन्नवदनाम्भोजः परमार्थप्रकाशकः ॥६॥
पुराणस्मृतिसारज्ञो नित्यतृप्तो महाञ्शुचिः ।
नित्यानन्दो निरातङ्को निःसङ्गो निर्मलात्मकः ॥७॥

निर्ममोनिरहङ्कारो विश्ववन्द्यपदाम्बुजः ।
सत्त्वप्रधानः सद्भावः सङ्ख्यातीतगुणोज्ज्वलः ॥८॥
अनघः सारहृदयः सुधीः सारस्वतप्रदः ।
सत्यात्मा पुण्यशीलश्च सांख्ययोगविचक्षणः ॥९॥
तपोराशिर्महातेजाः गुणत्रयविभागवित् ।
कलिघ्नः कालकर्मज्ञस्तमोगुणनिवारकः ॥१०॥

भगवान् भारतीजेता शारदाह्वानपण्डितः ।
धर्माधर्मविभागज्ञो लक्ष्यभेदप्रदर्शकः ॥११॥
नादबिन्दुकलाभिज्ञो योगिहृत्पद्मभास्करः ।
अतीन्द्रियज्ञाननिधिर्नित्यानित्यविवेकवान् ॥१२॥
चिदानन्दश्चिन्मयात्मा परकायप्रवेशकृत् ।
अमानुषचरित्राढ्यः क्षेमदायी क्षमाकरः ॥१३॥

भव्यो भद्रप्रदो भूरिमहिमा विश्वरञ्जकः ।
स्वप्रकाशः सदाधारो विश्वबन्धुः शुभोदयः ॥१४॥
विशालकीर्तिर्वागीशः सर्वलोकहितोत्सुकः ।
कैलासयात्रासम्प्राप्तचन्द्रमौलिप्रपूजकः ॥१५॥
काञ्च्यां श्रीचक्रराजाख्ययन्त्रस्थापनदीक्षितः ।
श्रीचक्रात्मकताटङ्कतोषिताम्बामनोरथः ॥१६॥

श्रीब्रह्मसूत्रोपनिषद्भाष्यादिग्रन्थकल्पकः ।
चतुर्दिक्चतुराम्नायप्रतिष्ठाता महामतिः ॥१७॥
द्विसप्ततिमतोच्छेत्ता सर्वदिग्विजयप्रभुः ।
काषायवसनोपेतो भस्मोद्धूलितविग्रहः ॥१८॥
ज्ञानात्मकैकदण्डाढ्यः कमण्डलुलसत्करः ।
गुरुभूमण्डलाचार्यो भगवत्पादसंज्ञकः ॥१९॥

व्याससन्दर्शनप्रीतो ऋष्यशृङ्गपुरेश्वरः ।
सौन्दर्यलहरीमुख्यबहुस्तोत्रविधायकः ॥२०॥
चतुःषष्टिकलाभिज्ञो ब्रह्मराक्षसमोक्षदः ।
श्रीमन्मण्डनमिश्राख्यस्वयंभूजयसंनुतः ॥२१॥
तोटकाचार्यसम्पूज्यः पद्मपादार्चिताङ्घ्रिकः ।
हस्तामलकयोगीन्द्रब्रह्मज्ञानप्रदायकः ॥२२॥
सुरेश्वराख्यसच्छिष्यसंन्यासाश्रमदायकः ।
नृसिंहभक्तः सद्रत्नगर्भहेरम्बपूजकः ॥२३॥
व्याख्यासिंहासनाधीशो जगत्पूज्यो जगद्गुरुः ॥२४॥
इति श्रीमच्छङ्करार्यसर्वलोकगुरोः परम् ।
नाम्नामष्टोत्तरशतं भुक्तिमुक्तिफलप्रदम् ॥
त्रिसन्ध्यं यः पठेद् भक्त्या सर्वान् कामानवाप्नुयात् ॥२५॥
इति श्रीमच्छङ्कराचार्याष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

•

## श्री-नृसिंहगिरि-महामण्डलेश्वर-अष्टोत्तर-शतनामस्तोत्रम्

ब्रह्मवर्णसमुद्भूतो ब्रह्ममार्गप्रवर्द्धकः ।
ब्रह्मज्ञानसदासक्तो ब्रह्मज्ञानपरायणः ॥१॥
शिवपंचाक्षररतोऽशिवज्ञानविनाशकः ।
शिवाभिषेकनिरतः शिवपूजापरायणः ॥२॥
नारायणप्रवचनो नारायणपरायणः ।
नारायणप्रत्नतनुर्नारायणनयस्थितः ॥३॥
दक्षिणामूर्तिपीठस्थो दक्षिणामूर्तिदेवतः ।
श्रीमेधादक्षिणामूर्तिमंत्रयन्त्रसदारतः ॥४॥
मण्डलेशवरश्रेष्ठो मण्डलेशवरप्रदः ।
मण्डलेशगुरुश्रेष्ठो मण्डलेशवरस्तुतः ॥५॥
निरञ्जनप्रपीठस्थो निरञ्जनविचारकः ।
निरञ्जनसदाचारो निरञ्जनतनुस्थितः ॥६॥
वेदविद्वेदहृदयो वेदपाठप्रवर्तकः ।
वेदराद्धान्तसंविष्टोऽवेदपथप्रखण्डकः ॥७॥

शांकराद्वैतव्याख्याता शांकराद्वैतसंस्थितः ।
शांकराद्वैतविद्वेष्टृविनाशनपरायणः ॥८॥
अत्याश्रमाचाररतो भूतिधारणतत्परः ।
सिद्धासनसमासीनो काञ्चनाभो मनोहरः ॥९॥
अक्षमालाधृतग्रीवः काषायपरिवेष्टितः ।
ज्ञानमुद्रादक्षहस्तो वामहस्तकमण्डलुः ॥१०॥
संन्यासाश्रमनिर्माता परहंसधुरन्धरः ।
संन्यासिनयसंस्कर्ता परहंसप्रमाणकः ॥११॥
माधुर्यपूर्ण-चरितो मधुराकार-विग्रहः ।
मधुवाङ्निग्रहरतो मधुविद्याप्रदायकः ॥१ ॥
मधुरालापचतुरो निग्रहानुग्रहक्षमः ।
आर्द्धरात्रध्यानरतस्त्रिपुण्ड्रांकितमस्तकः ॥१३॥
आरण्यवार्तिकपरः पुष्पमालाविभूषितः ।
वेदान्तवार्तानिरतः प्रस्थानत्रयभूषणः ॥१४॥
सानन्दज्ञानभाष्यादिग्रन्थग्रन्थिप्रभेदकः ।
दृष्टान्तानूक्तिकुशलो दृष्टान्तार्थनिरूपकः ॥१५॥
वीकानेरगुरुर्वाग्मी वंगदेशप्रपूजितः ।
लाहौरसरगोदादौ - हिन्दूधर्मप्रचारकः ॥१६॥
गणेशजययात्रादिप्रतिष्ठापनतत्परः ।
गणेशशक्तिसूर्येशविष्णुभक्तिप्रचारकः ।·१७॥
सर्ववर्णसमाम्नातलिंगपूजाप्रवर्द्धकः ।
गीतोत्सवसपर्यादिचित्रयज्ञप्रवर्तकः ॥१८॥
लोकेश्वरानन्दप्रियो दयानन्दप्रसेवितः ।
आत्मानन्दगिरिज्ञानसतीर्थ्यपरिवेष्टितः ॥१९॥
अनन्तश्रद्धापरमप्रकाशानन्दपूजितः ।
जूनापीठस्थरामेशवरानन्दगिरेर्गुरुः ॥२०॥
माधवानन्दसंवेष्टा काशिकानन्ददेशिकः ।
वेदान्तमूर्तिराचार्यो शान्तो दान्तः प्रभुस्सुहृत् ॥२१॥
निर्ममो विश्वतरणिः स्मितास्यो निर्मलो महान् ।
तत्त्वमस्यादिवाक्योत्थदिव्यज्ञानप्रदायकः ॥२२॥
गिरीशानन्दसम्प्राप्तपरमहंसपरम्परा -
जनार्दनगिरिब्रह्मसंन्यासाश्रमदीक्षितः ॥२३॥

मण्डलेशकुलश्रेष्ठजयेन्द्रपुरीसंस्तुतः ।
रामानन्दगिरिस्थानस्थापितो मण्डलेश्वरः ॥२४॥
शंदमहेशानन्दाय स्वकीयपददायकः ।
यतीन्द्रकृष्णानन्दैश्च पूजितपादपद्मकः ॥२५॥
उषोत्थानस्नानपूजाजपध्यानप्रचोदकः ।
तुरीयाश्रमसंविष्टभाष्यपाठप्रवर्तकः ॥२६॥
अष्टलक्ष्मीप्रदस्तृप्तः स्पर्शदीक्षाविधायकः ।
अहैतुककृपासिन्धुरनघोभक्तवत्सलः ॥२७॥
विकारशून्यो दुर्धर्षः शिवसक्तो वरप्रदः ।
काशीवासप्रियो मुक्तो भक्तमुक्तिविधायकः ॥२८॥
श्रीमत्परमहंसादिसमस्तविरुदांकितः ।
नृसिंहब्रह्म वेदान्तजगत्यद्य जगद्गुरुः ॥२९॥
विलयं यान्ति पापानि गुरुनामानुकीर्तनात् ।
मुच्यते नात्र संदेहः श्रद्धाभक्तिसमन्वितः ॥३०॥

इति श्रीनृसिंह-गिरि-महामण्डलेश्वर-अष्टोत्तरशतनामस्तोत्रम् ॥

# ❀ तीर्थस्तोत्राणि ❀

## द्वादशज्योतिर्लिङ्गस्तोत्रम्

सौराष्ट्रदेशे विशदेऽतिरम्ये ज्योतिर्मयं चंद्रकलावतंसम् ।
भक्तिप्रदानाय कृपावतीर्णं तं सोमनाथं शरणं प्रपद्ये ॥१॥
श्रीशैलसंगे विबुधातिसंगे तुलाद्रितुंगेऽपि मुदा वसन्तम् ।
तमर्जुनं मल्लिकपूर्वमेकं नमामि संसारसमुद्रसेतुम् ॥२॥
अवंतिकायां विहितावतारं मुक्तिप्रदानाय च सज्जनानाम् ।
अकालमृत्योः परिरक्षणार्थं वन्दे महाकालमहासुरेशम् ॥३॥
कावेरिकानर्मदयोः पवित्रे समागमे सज्जनतारणाय ।
सदैव मान्धातृपुरे वसन्तमोंकारमीशं शिवमेकमीडे ॥४॥
पूर्वोत्तरे प्रज्वलिकानिधाने सदा वसन्तं गिरिजासमेतम् ।
सुरासुराराधितपादपद्मं श्रीवैजनाथं तमहं नमामि ॥५॥
याम्ये सदंगे नगरेऽतिरम्ये विभूषितांगं विविधैश्च भोगैः ।
सद्भक्तिमुक्तिप्रदमीशमेकं श्रीनागनाथं शरणं प्रपद्ये ॥६॥
महाऽद्रिपार्श्वे च तटे रमन्तं संपूज्यमानं सततं मुनीन्द्रैः ।
सुरासुरैर्यक्षमहोरगाद्यैः केदारमीशं शिवमेकमीडे ॥७॥
सह्याद्रिशीर्षे विमले वसन्तं गोदावरीतीरपवित्रदेशे ।
यद्दर्शनात्पातकमाशु नाशं प्रयाति तं त्र्यंबकमीशमीडे ॥८॥
सुताम्रपर्णीजलराशियोगे निबध्य सेतुं विशिखैरसंख्यैः ।
श्रीरामचंद्रेण समर्पितं तं रामेश्वराख्यं नियतं नमामि ॥९॥
यं डाकिनीशाकिनिकासमाजे निषेव्यमाणं पिशिताशनैश्च ।
सदैव भीमादिपदप्रसिद्धं तं शंकरं भक्तहितं नमामि ॥१०॥
सानंदमानंदवने वसन्तमानंदकंदं हतपापवृन्दम् ।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥११॥
इलापुरे रम्यविशालकेऽस्मिन्समुल्लसन्तं च जगद्वरेण्यम् ।
वन्दे महोदारतरस्वभावं घृष्णेश्वराख्यं शरणं प्रपद्ये ॥१२॥
ज्योतिर्मयद्वादशलिङ्गकानां शिवात्मनां प्रोक्तमिदं क्रमेण ।
स्तोत्रं पठित्वा मनुजोऽतिभक्त्या फलं तदालोक्य निजं भजेच्च ॥१३॥

इति द्वादशज्योतिर्लिङ्गस्तोत्रम् संपूर्णम् ॥

•

## द्वादशज्योतिर्लिङ्गस्मरणम्

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोंकारममलेश्वरम् ॥१॥
परल्यां वैजनाथं च डाकिन्यां भीमशंकरम् ।
सेतुबंधे तु रामेशं नागेशं दारुकावने ॥२॥
हिमालयं तु केदारं घुसृणेशं शिवालये ॥३॥
एतानि ज्योतिर्लिङ्गानि सायंप्रातः पठेन्नरः ।
सप्तजन्मकृतं पापं स्मरणेन विनश्यति ॥४॥

इति द्वादशज्योतिर्लिंगस्मरणं संपूर्णम् ॥

•

## गंगाष्टकम् (१)

भगवति भवलीलामौलिमाले तवाम्भः-
कणमणुपरिमाणं प्राणिनो ये स्पृशन्ति ।
अमरनगरनारीचामरग्राहिणीनां
विगतकलिकलङ्कातङ्कमङ्के लुठन्ति ॥१॥

ब्रह्मांडं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती
स्वर्लोकादापतन्ती कनकगिरिगुहागंडशैलात्स्खलन्ती ।
क्षोणीपृष्ठे लुठन्ती दुरितचयचमूर्निर्भरं भर्त्सयन्ती
पाथोधिं पूरयन्ती सुरनगरसरित्पावनी नः पुनातु ॥२॥

मज्जन्मातंगकुम्भच्युतमदमदिरामोदमत्तालिजालं
स्नानैः सिद्धांगनानां कुचयुगविगलत्कुंकुमासंगपिंगम् ।
सायं प्रातर्मुनीनां कुशकुसुमचयैश्छिन्नतीरस्थनीरं
पायान्नो गांगमम्भः करिकरमकराक्रान्तरंहस्तरंगम् ॥३॥

आदावादिपितामहस्य नियमव्यापारमात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥४॥

शैलेंद्रादवतारिणी निजजले मज्जज्जनोत्तारिणी
पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी ।
शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीप्रांतविहारिणी विजयते गंगा मनोहारिणी ॥५॥

कुतो वीचिर्वीचिस्तव यदि गता लोचनपथं
त्वमापीता पीतांबरपुरनिवासं वितरसि ।
त्वदुत्संगे गंगे पतति यदि कायस्तनुभृतां
तदा मातः शातक्रतवपदलाभोऽप्यतिलघुः ॥६॥

गंगे त्रैलोक्यसारे सकलसुरवधूधौतविस्तीर्णतोये
पूर्णब्रह्मस्वरूपे हरिचरणरजोहारिणि स्वर्गमार्गे ।
प्रायश्चित्तं यदि स्यात्तव जलकणिका ब्रह्महत्यादिपापे
कस्त्वां स्तोतुं समर्थस्त्रिजगदघहरे देवि गंगे प्रसीद ॥७॥

मातर्जाह्नवि शंभुसंगवलिते मौलौ निधायांजलिं
त्वत्तीरे वपुषोऽवसानसमये नारायणांघ्रिद्वयम् ।
सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवे
भूयाद्भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥८॥

गंगाष्टकमिदं पुण्यं यः पठेत्प्रयतो नरः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥९॥

इति गंगाष्टकं संपूर्णम् ॥

●

## गंगाष्टकम् (२)

नमस्तेऽस्तु गंगे त्वदंगप्रसंगाद् भुजंगास्तुरंगाः कुरंगाः प्लवंगाः ।
अनंगारिरंगाः ससंगाः शिवांगा भुजंगाधिपांगीकृतांगा भवंति ॥१॥

नमो जह्नुकन्ये न मन्ये त्वदन्यैर्निसर्गेन्दुचिह्नादिभिर्लोकभर्तुः ।
अतोऽहं नतोऽहं सतो गौरतोये वसिष्ठादिभिर्गीयमानाभिधेये ॥२॥

त्वदामज्जनात्सज्जनो दुर्जनो वा विमानैः समानः समानैर्हि मानैः ।
समायाति तस्मिन्पुरारातिलोके परद्वारसंरुद्धदिक्पाललोके ॥३॥

स्वरावासदंभोलिदंभोऽपि रंभापरीरंभसंभावनाधीरचेताः ।
समाकांक्षते त्वत्तटे वृक्षवाटीकुटीरे वसन्नेतुमायुर्दिनानि ॥४॥

त्रिलोकस्य भर्तुर्जटाजूटबंधात्स्वसीमान्तभागे मनाक्प्रस्खलंतः ।
भवान्या रुषा प्रौढशापत्नभावात्करेणाहतास्त्वत्तरंगा जयंति ॥५॥

जलोन्मज्जदैरावतोद्दानकुंभस्फुरत्प्रस्खलत्सांद्रसिंदूररागे ।
क्वचित्पद्मिनीरेणुभंगे प्रसंगे मनः खेलतां जह्नुकन्यातरंगे ॥६॥

भवत्तीरवानीरवातोत्थधूलीलवस्पर्शतस्तत्क्षणक्षीणपापः ।
जनोऽयं जगत्पावने त्वत्प्रसादात्पदे पौरुहूतेऽपि धत्तेऽवहेलाम् ॥७॥

त्रिसंध्यानमल्लेखकोटीरनानाविधानेकरत्नांशुबिंबप्रभाभिः ।
स्फुरत्पादपीठे हठेनाष्टमूर्तेर्जटाजूटवासे नताः स्मः पदं ते ॥८॥

इदं यः पठेदष्टकं जह्नुपुत्र्यास्त्रिकालं कृतं कालिदासेन रम्यम् ।
समायास्यतींद्रादिभिर्गीयमानं पदं कैशवं शैशवं नो लभेत्सः ॥९॥
इति श्रीकालिदासकृतं गंगाष्टकस्तोत्रं सम्पूर्णम् ॥

## गंगाष्टकम् (३)

कत्यक्षीणि करोटयः कति कति द्वीपिद्विपानां त्वचः
काकोलाः कति पन्नगाः कति सुधाधाम्नश्च खंडाः कति ।
किं च त्वं च कति त्रिलोकजननि त्वद्वारिपूरोदरे
मज्जज्जंतुकदंबकं समुदयत्येकैकमादाय यत् ॥ १ ॥
देवि त्वत्पुलिनांगणे स्थितिजुषां निर्मानिनां ज्ञानिनां
स्वल्पाहारनिबद्धशुद्धवपुषां तार्णं गृहं श्रेयसे ।
नान्यत्र क्षितिमंडलेश्वरशतैः संरक्षितो भूपतेः
प्रसादो ललनागणैरधिगतो भोगींद्रभोगोन्नतः ॥ २ ॥
तत्तत्तीर्थगतैः कदर्थनशतैः किं तैरनर्थाश्रितै-
र्ज्योतिष्टोममुखैः किमीशविमुखैर्यज्ञैरवज्ञादृतैः ।
सूते केशववासवादिविबुधागाराभिरामां श्रियं
गंगे देवि भवत्तटे यदि कुटीवासः प्रयासं विना ॥ ३ ॥
गंगातीरमुपेत्य शीतलशिलामालंब्य हेमांचली
यैराकर्णि कुतूहलाकुलतया कल्लोलकोलाहलः ।
ते शृण्वंति सपर्वपर्वतशिलासिंहासनाध्यासनाः
संगीतागमशुद्धसिद्धरमणीमंजीरधीरध्वनिम् ॥ ४ ॥
दूरं गच्छ सकच्छगं च भवतो नालोकयामो मुखं
रे पाराक वराक साकमितरैर्नाकिप्रदैर्गम्यताम् ।
सद्यः प्रोद्यतमंदमारुतरजः प्राप्ता कपोलस्थले
गंगांभःकणिका विमुक्तिगणिकासज्ञाय संभाव्यते ॥ ५ ॥
विष्णोः संगतिकारिणी हरजटाजूटाटवीचारिणी
प्रायश्चित्तनिवारिणी जलकणैः पुण्यौघविस्तारिणी ।
भूभृत्कंदरदारिणी निजजले मज्जज्जनोत्तारिणी
श्रेयः स्वर्गविहारिणी विजयते गंगा मनोहारिणी ॥ ६ ॥
वाचालं विकलं खलं श्रितमलंकामाकुलं व्याकुलं
चांडालं तरलं निपीतगरलं दोषाविलं चाखलम् ।
कुंभीपाकगतं तमंतककरादाकृष्य कस्तारयेन्
मातर्जह्नु नरेन्द्रनंदिनि तव स्वल्पोदबिन्दुं विना ॥ ७ ॥

श्लेष्मश्लेषणवानलेऽमृतबिले शोकाकुले व्याकुले
कंठे घर्घरघोषनादमलिने काये च संमीलति।
यां ध्यायन्नपि भारभंगुरतरां प्राप्नोति मुक्तिं नरः
स्नातुश्चेतसि जाह्नवीं निवसतां संसारसंतापहृत् ॥ ८ ॥

इति श्रीमत्कालिदासविरचितं गंगाष्टकस्तोत्रं सम्पूर्णम् ॥

•

## गंगाष्टकम् ( ४ )

मातः शैलसुतासपत्नि वसुधाशृंगारहारावलि
स्वर्गारोहणवैजयंति भवतीं भागीरथीं प्रार्थये।
त्वत्तीरे वसतस्त्वदंबु पिबतस्त्वद्वीचिषु प्रेङ्खतस्-
त्वन्नामस्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥ १ ॥
त्वत्तीरे तरुकोटरांतरगतो गंगे विहंगो वरं
त्वन्नीरे नरकांतकारिणि वरं मत्स्योऽथवा कच्छपः।
नैवान्यत्र मदांधसिंधुरघटासंघट्टघंटारणत्-
कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥
उक्षापक्षी तुरग उरगः कोपि वा वारणो वा
वाराणस्यां जननमरणक्लेशदुःखासहिष्णुः।
न त्वन्यत्र प्रविरलरणत्कंकणक्वाणमिश्रं
वारस्त्रीभिश्चमरमरुता वीजितो भूमिपालः ॥ ३ ॥
काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुण्ठितं
स्रोतोभिश्चलितं तटांबुलुलितं वीचीभिरांदोलितम्।
दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानं कदा
द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः ॥ ४ ॥
अभिनवबिसवल्ली पादपद्मस्य विष्णो-
र्मदनमथनमौलेर्मालती पुष्पमाला।
जयति जयपताका काऽप्यसौ मोक्षलक्ष्म्याः
क्षपितकलिकलंका जाह्नवी नः पुनातु ॥ ५ ॥
एतत्तालतमालसालसरलव्यालोलवल्लीलता-
च्छन्नं सूर्यकरप्रतापरहितं शंखेन्दुकुन्दोज्ज्वलम्।
गंधर्वामरसिद्धकिन्नरवधूतुंगस्तनास्फालितं
स्नानाय प्रतिवासरं भवतु मे गांगं जलं निर्मलम् ॥ ६ ॥

गांगं वारि मनोहारि मुरारिचरणच्युतम्।
त्रिपुरारिशिरश्चारि पापहारि पुनातु माम्॥ ७॥

पापापहारि दुरितारि तरंगधारि
शैलप्रचारि गिरिराजगुहाविदारि।
झंकारकारि हरिपादरजोपहारि
गाङ्गं पुनातु सततं शुभकारि वारि॥ ८॥

गंगाष्टकं पठति यः प्रयतः प्रभाते
वाल्मीकिना विरचितं शुभदं मनुष्यः।
प्रक्षाल्य गात्रकलिकल्मषपंकमाशु
मोक्षं लभेत्पतति नैव नरो भवाब्धौ॥ ९॥

इति श्रीवाल्मीकिविरचितं गंगाष्टकं संपूर्णम्॥

## यमुनाष्टकम् ( १ )

कृपापारावारां तपनतनयां तापशमनीं
मुरारिप्रेयस्यां भवभयदवां भक्तिवरदाम्।
वियज्जालान्मुक्तां श्रियमपि सुखाप्तेः परिदिनं
सदा धीरो नूनं भजति यमुनां नित्यफलदाम्॥१॥

मधुवनचारिणि भास्करवाहिनि जाह्नविसंगिनि सिंधुसुते
मधुरिपुभूषिणि माधवतोषिणि गोकुलभीतिविनाशकृते।
जगदघमोचनि मानसदायिनि केशवकेलिनिदानगते
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम्॥२॥

अयि मधुरे मधुमोदविलासिनि शैलविहारिणि वेगभरे
परिजनपालिनि दुष्टनिषूदिनि वांछितकामविलासधरे।
व्रजपुरवासिजनार्जितपातकहारिणि विश्वजनोद्धरिके
जय यमुने० ॥३॥

अतिविपदाम्बुधिमग्नजनं भवतापशताकुलमानसकं
गतिमतिहीनमशेषभयाकुलमागतपादसरोजयुगम्।
ऋणभयभीतिमनिष्कृतिपातककोटिशतायुतपुंजतरं
जय यमुने० ॥४॥

नवजलदद्युतिकोटिलसत्तनुहेममयाभररंजितके
तडिदवहेलिपदांचलचंचलशोभितपीतसुचैलधरे ।
मणिमयभूषणचित्रपटासनरंजितगंजितभानुकरे
जय यमुने० ॥५॥

शुभपुलिने मधुमत्तयदूद्भवरासमहोत्सवकेलिभरे ।
उच्चकुलाचलराजितमौक्तिकहारमयाभररोदसिके ।
नवमणिकोटिकभास्करकंचुकिशोभिततारकहारयुते
जय यमुने० ॥६॥

करिवरमौक्तिकनासिकभूषणवातचमत्कृतचंचलके
मुखकमलामलसौरभचंचलमत्तमधुव्रतलोचनिके ।
मणिगणकुंडललोलपरिस्फुरदाकुलगंडयुगामलके
जय यमुने० ॥७॥

कलरवनूपुरहेममयांचितपादसरोरुहसारुणिके
धिमिधिमिधिमिधिमितालविनोदितमानसमंजुलपादगते ।
तव पदपंकजमाश्रितमानवचित्तसदाखिलतापहरे
जय यमुने० ॥८॥

इति श्रीशंकराचार्यविरचितं यमुनाष्टकं सम्पूर्णम् ॥

•

## यमुनाष्टकम् (२)

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी ।
मनोऽनुकूलकूलकुञ्जपुंजधूतदुर्मदा
धुनोतु मे मनोमलं कलिंदनंदिनी सदा ॥१॥

मलापहारि वारि पूरि भूरि मण्डिता मृता
भृशं प्रपातकप्रपंचनाऽतिपंडिता निशा ।
सुनंदनंदनांगसंगरागरञ्जिता हिता
धुनोतु मे मनोमलं० ॥२॥

लसत्तरंगसंगधूतभूतजातपातका
नवीनमाधुरीधुरीणभक्तिजातचातका ।
तटांतवासदा सहंससंसृताह्निकामदा
धुनोतु मे मनोमलं० ॥३॥

विहाररासखेदभेदधीरतीरमारुता
गता गिरामगोचरा यदीयनीरचारुता ।
प्रवाहसाहचर्यपूतमेदिनी नदीनदा
धुनोतु मे मनोमलं० ॥४॥

तरंगसंगसैकतांतरांतितं सदाऽसिता
शरन्निशाकरांशुमंजुमंजरीसभाजिता ।
भवार्चनापचारुणांवुनाधुनानिशारदा
धुनोतु मे मनोमलं० ॥५॥

जलांतकेलिकारिचारुराधिकांगरागिणी
स्वभर्तुरन्यदुर्लभांगतांशभागिनी सदा ।
स्वदत्तसुप्तसप्तसिंधुभेदनातिकोविदा
धुनोतु मे मनोमलं० ॥६॥

जलच्युताच्युतांगरागलंपटालिशालिनी
विलोलराधिकाकचांतचंपकालिमालिनी ।
सदावगाहनावतीर्णभर्तृभृत्यनारदा
धुनोतु मे मनोमलं० ॥७॥

सदैव नंदनंदकेलिशालिकुंजमंजुला
तटोत्थफुल्लमल्लिकाकदंबरेणुसूज्ज्वला ।
जलावगाहिनां नृणां भवाब्धिसिंधुपारदा
धुनोतु मे मनोमलं कलिंदनंदिनी सदा ॥८॥

इति श्रीमच्छंकराचार्यविरचितं यमुनाष्टकं सम्पूर्णम् ॥

•

## नर्मदाष्टकम्

सबिंदुसिंधुसुस्खलत्तरंगभंगरंजितं
द्विषत्सु पापजातजातकारिवारिसंयुतम् ।
कृतांतदूतकालभूतभीतिहारिवर्मदे
त्वदीयपादपंकजं नमामि देवि नर्मदे ॥१॥

त्वदंबुलीनदीनमीनदिव्यसंप्रदायकं
कलौ मलौघभारहारि सर्वतीर्थनायकम् ।
सुमत्स्यकच्छनक्रचक्रचक्रवाकशर्मदे
त्वदीयपाद० ॥२॥

महागभीरनीरपूरपापधूतभूतलं
ध्वनत्समस्तपातकारिदारितापदाचलम् ।
जगल्लये महाभये मृकंडुसूनुहर्म्यदे
त्वदीयपाद० ॥३॥

गतं तदैव मे भयं त्वदंबु वीक्षितं यदा
मृकंडुसूनुशौनकासुरारिसेवि सर्वदा ।
पुनर्भवाब्धिजन्मजं भवाब्धिदु:खवर्मदे
त्वदीयपाद० ॥४॥

अलक्षलक्षकिन्नरामरासुरादिपूजितं
सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् ।
वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे
त्वदीयपाद० ॥५॥

सनत्कुमारनाचिकेतकश्यपात्रिषट्पदै-
र्धृतं स्वकीयमानसेषु नारदादिषट्पदै: ।
रवींदुरंतिदेवदेवराजकर्मशर्मदे
त्वदीयपाद० ॥६॥

अलक्षलक्षलक्षपापलक्षसारसायुधं
ततस्तु जीवजंतुतंतुभुक्तिमुक्तिदायकम् ।
विरिंचिविष्णुशंकरस्वकीयधामवर्मदे
त्वदीयपाद० ॥७॥

अहो मृतं स्वनं श्रुतं महेशकेशजातटे
किरातसूतवाडवेषु पंडिते शठे नटे ।
दुरंतपापतापहारिसर्वजंतुशर्मदे
त्वदीयपाद० ॥८॥

इदं तु नर्मदाष्टकं त्रिकालमेव ये सदा
पठन्ति ते निरंतरं न यान्ति दुर्गतिं कदा ।
सुलभ्यदेहदुर्लभं महेशधामगौरवं
पुनर्भवा नरा न वै विलोकयन्ति रौरवम् ॥९॥

इति श्रीमच्छङ्कराचार्यविरचितं नर्मदाष्टकं सम्पूर्णम् ॥

•

## प्रयागाष्टकम्

मुनयः ऊचुः

सुरमुनिदितिजेन्द्रैः सेव्यते योऽस्ततंद्रै-
र्गुरुतरदुरितानां का कथा मानवानाम् ।
स भुवि सुकृतकर्तुर्वाञ्छितावाप्तिहेतु-
र्जयति विजितयागस्तीर्थराजः प्रयागः ॥ १ ॥

श्रुतिः प्रमाणं स्मृतयः प्रमाणं पुराणमप्यत्र परं प्रमाणम् ।
यत्रास्ति गंगा यमुना प्रमाणं स तीर्थराजो जयति प्रयागः ॥ २ ॥
न यत्र योगाचरणप्रतीक्षा न यत्र यज्ञेष्टिविशिष्टदीक्षा ।
न तारकज्ञानगुरोरपेक्षा स तीर्थराजो जयति प्रयागः ॥ ३ ॥
चिरं निवासं न समीक्षते यो ह्युदारचित्तः प्रददाति च क्रमात् ।
यः कल्पितार्थांश्च ददाति पुंसः स तीर्थराजो जयति प्रयागः ॥ ४ ॥
यत्राप्लुतानां न यमो नियंता यत्रास्थितानां सुगतिप्रदाता ।
यत्राश्रितानाममृतप्रदाता स तीर्थराजो जयति प्रयागः ॥ ५ ॥
पुर्यः सप्त प्रसिद्धाः प्रतिवचनकरीस्तीर्थराजस्य नार्यो
नैकस्यान्मुक्तिदाने भवति च सगुणा काश्यते ब्रह्म यस्याम् ।
सेयं राज्ञो प्रधाना प्रियवचनकरी मुक्तिदानेन युक्ता
येन ब्रह्मांडमध्ये स जयति सुतरां तीर्थराजः प्रयागः ॥ ६ ॥
तीर्थावली यस्य तु कंठभागे दानावली वल्गति पादमूले ।
व्रतावली दक्षिणपादमूले स तीर्थराजो जयति प्रयागः ॥ ७ ॥
आज्ञाऽपि प्रज्ञाः प्रभवोऽपि यज्ञाः सप्तर्षिसिद्धाः सुकृतानभिज्ञा ।
विज्ञापयंतः सततं हि काले स तीर्थराजो जयति प्रयागः ॥ ८ ॥
सितासिते यत्र तरंगचामरे नद्यौ विभाते मुनिभानुकन्यके ।
लीलातपत्रं वट एव साक्षात्स तीर्थराजो जयति प्रयागः ॥ ९ ॥

तीर्थराजप्रयागस्य माहात्म्यं कथयिष्यतः ।
शृण्वतः सततं भक्त्या वाञ्छितं फलमाप्नुयात् ॥ १० ॥

इति श्रीमत्स्यपुराणे प्रयागराजमहात्म्याष्टकं संपूर्णम् ॥

•

## पुष्कराष्टकम्

श्रियायुतं त्रिदेहतापपापराशिनाशकं
मुनींद्रसिद्धसाध्यदेवदानवैरभिष्टुतम् ।
तटेऽस्ति यज्ञपर्वतस्य मुक्तिदं सुखाकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशंकरम् ॥१॥

सदार्यमासशुक्लपञ्चवासरे वरागतं
तदन्यथांतरिक्षगं सुतंत्रभावनानुगम् ।
तदंबुपानमज्जनं दृशां सदामृताकरं
नमामि० ॥२॥

त्रिपुष्कर त्रिपुष्कर त्रिपुष्करेति संस्मरेत्
स दूरदेशगोऽपि यस्तदंगपापनाशनम् ।
प्रपन्नदुःखभंजनं सुरंजनं सुधाकरं
नमामि० ॥३॥

मृकंडुमंकणौ पुलस्त्यकण्वपर्वतासिता
अगस्त्यभार्गवौ दधीचिनारदौ शुकादयः ।
सपद्मतीर्थपावनैकदृष्टयो दयाकरं
नमामि० ॥४॥

सदा पितामहेक्षितं वराहविष्णुनेक्षितं
तथाऽमरेशरक्षितं सुरासुरैः समीक्षितम् ।
इहैव भुक्तिमुक्तिदं प्रजाकरं धनाकरं
नमामि० ॥५॥

त्रिदंडिदंडिब्रह्मचारितापसैः सुसेवितं
पुरार्धचन्द्रप्रासदेवनंदिकेश्वराभिधैः ।
सवैद्यनाथनीलकंठसेवितं सुधाकरं
नमामि० ॥६॥

सुपञ्चधा सरस्वती विराजते यदंतरे
तथैकयोजनायतं विभाति तीर्थनायकम् ।
अनेकदैवपैत्रतीर्थसागरं रसाकरं
नमामि० ॥७॥

यमादिसंयुतो नरस्त्रिपुष्करं निमज्जति
पितामहश्च माधवोऽप्युमाधवः प्रसन्नताम् ।
प्रयाति तत्पदं ददात्ययत्नतो गुणाकरं
नमामि० ॥८॥
इदं हि पुष्कराष्टकं सुनीतिनीरजाश्रितं
स्थितं मदीयमानसे कदापि माऽपगच्छतु ।
त्रिसंध्यमापठंति ये त्रिपुष्कराष्टकं नराः
प्रदीप्तदेहभूषणा भवंत्युमेशकिंकराः ॥९॥
इति श्रीमच्छंकराचार्यविरचितं श्रीपुष्कराष्टककं समाप्तम् ॥

•

## काशीपञ्चकम्

मनोनिवृत्तिः परमोपशांतिः सा तीर्थवर्या मणिकर्णिका च ।
ज्ञानप्रवाहा विमलादिगंगा सा काशिकाहं निजबोधरूपा ॥१॥
यस्मामिदं कल्पितमिन्द्रजालं चराचरं भाति मनोविलासम् ।
सच्चित्सुखैका परमात्मरूपा सा काशिका० ॥२॥
कोशेषु पञ्चस्वधिराजमाना बुद्धिर्भवानी प्रतिदेहगेहम् ।
साक्षी शिवः सर्वगणोऽन्तरात्मा सा काशिका० ॥३॥
काश्यां हि काश्यते काशी काशी सर्वप्रकाशिका ।
सा काशी विदिता येन तेन प्राप्ता हि काशिका ॥४॥
काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगंगा
भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः ।
विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा
देहे सर्वं यदि वसति पुनस्तीर्थमन्यत् किमस्ति ॥५॥
इति श्रीमच्छंकराचार्यविरचितं काशीपञ्चकं संपूर्णम् ।

•

## श्रीमणिकर्णिकाष्टकम्

त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ
वादं तौ कुरुतः परस्परमुभौ जंतोः प्रयाणोत्सवे ।
मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणात्
तन्मध्याद् भृगुलाञ्छनो गरुडगः पीतांबरो निर्गतः ॥१॥
इंद्राद्यास्त्रिदशाः पतंति नियतं भोगक्षये ते पुन-
र्जायन्ते मनुजास्ततोऽपि पशवः कीटा पतंगादयः ।

हे मातर्मणिकर्णिके तव जले मज्जंति निष्कलमषाः
सायुज्येऽपि किरीटकौस्तुभधरा नारायणः स्युर्नराः ॥२॥
काशी धन्यतमा विमुक्तिनगरी सालंकृता गंगया
तत्रेयं मणिर्मणिका सुखकरी मुक्तिर्हि तत्किकरी ।
स्वर्लोकस्तुलितः सदैव विबुधैः काश्या समं ब्रह्मणा
काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खे गतः ॥३॥
गंगातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा
तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिदः ।
देवानामपि दुर्लभं स्थलमिदं पापौघनाशक्षमं
पूर्वोपार्जितपुण्यपुंजगमकं पुण्यैर्जनैः प्राप्यते ॥४॥
दुःखांभोनिधिमग्नजंतुनिवहास्तेषां कथं निष्कृति-
र्ज्ञात्वैतद्धि विरिंचिना विरचिता वाराणसी शर्मदा ।
लोकाः स्वर्गमुखास्ततोऽपि लघवो भोगांतपातप्रदाः
काशी मुक्तिपुरी सदा शिवकरी धर्मार्थकामोत्तरा ॥५॥
एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरो
योऽप्येकः किल शंकरो विषधरो गङ्गाधरोमाधरः ।
ये मातर्मणिकर्णिके तव जले मज्जंति ते मानवा
रुद्रा वा हरयो भवंति बहवस्तेषां बहुत्वं कथम् ॥६॥
त्वत्तीरे मरणं तु मंगलकरं देवैरपि श्लाघ्यते
शक्रस्तं मनुजं सहस्रनयनैर्द्रष्टुं सदातत्परः ।
आयांतं सविता सहस्रकिरणैः प्रत्युद्गतोऽभूत्सदा
पुण्योऽसौ वृषगोऽथवा गरुडगः किं मंदिरं यास्यति ॥७॥
मध्याह्ने मणिकर्णिकास्नपनजं पुण्यं न वक्तुं क्षमः
स्वीयैरब्दशतैश्चतुर्मुखसुरो वेदार्थदीक्षागुरुः ।
योगाभ्यासबलेन चन्द्रशिखरस्तत्पुण्यपारं गतः
त्वत्तीरे प्रकरोति सुप्तपुरुषं नारायणं वा शिवम् ॥८॥
कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं
तत्सर्वं मणिकर्णिकास्नपनजे पुण्ये प्रविष्टं भवेत् ।
स्नात्वा स्तोत्रमिदं नरः पठति चेत्संसारपाथोनिधिं
तीर्त्वा पल्वलवत्प्रयाति सदनं तेजोमयं ब्रह्मणः ॥९॥

इति श्रीमच्छंकराचार्यविरचितं मणिकर्णिकाष्टकस्तोत्रं सम्पूर्णम् ॥

•

